संन्यासः ज्ञानं प्रति प्रत्यासन्न उच्यते; कामप्रवृत्त्यभावाच्च; कामप्रवृत्तेर्हि ज्ञानप्रतिकूलता सर्वशास्त्रेषु प्रसिद्धा। तस्मात् विरक्तस्य मुमुक्षोः विनापि ज्ञानेन 'ब्रह्मचर्यादेव प्रव्रजेत्' इत्यादि उपपन्नम्। ननु सावकाशत्वात् अनधिकृतविषयमेतदित्युक्तम्, यावज्जीवश्रुत्युपरोधात्– नैष दोषः, नितरां सावकाशत्वात् यावज्जीवश्रुतीनाम्; अविद्वत्कामिकर्तव्यतां हि अवोचाम सर्वकर्मणाम्; न तु निरपेक्षमेव जीवननिमित्तमेव कर्तव्यं कर्म; प्रायेण हि पुरुषाः कामबहुलाः; कामश्च अनेकविषयः अनेककर्मसाधनसाध्यश्च; अनेकफलसाधनानि च वैदिकानि कर्माणि दाराग्निसंबन्धपुरुषकर्तव्यानि, पुनः पुनश्च अनुष्ठीयमानानि बहुफलानि कृष्यादिवत्, वर्षशतसमाप्तीनि च गार्हस्थ्ये वा अरण्ये वा; अतः तदपेक्षया यावज्जीवश्रुतयः; 'कुर्वन्नेवेह कर्माणि' इति च मन्त्रवर्णः। तस्मिंश्च पक्षे विश्वजित्सर्वमेधयोः कर्मपरित्यागः, यस्मिंश्च पक्षे यावज्जीवानुष्ठानम्, तदा श्मशानान्तत्वम् भस्मान्तता च शरीरस्य। इतरवर्णापेक्षया वा यावज्जीवश्रुतिः; न हि क्षत्त्रियवैश्ययोः पारिव्राज्यप्रतिपत्तिरस्ति; तथा 'मन्त्रैर्यस्योदितो विधिः' 'ऐकाश्रम्यं त्वाचार्याः' इत्येवमादीनां क्षत्त्रियवैश्यापेक्षत्वम्। तस्मात् पुरुषसामर्थ्यज्ञानवैराग्यका-

माद्यपेक्षया व्युत्थानविकल्पक्रमपारिव्राज्यप्रतिपत्तिप्रकाराः न विरुध्यन्ते; अनधिकृतानां च पृथग्विधानात् पारिव्राज्यस्य 'स्नातको वास्नातको वोत्सन्नाग्निरनग्निको वा' इत्यादिना; तस्मात् सिद्धानि आश्रमान्तराणि अधिकृतानामेव ॥

इति चतुर्थाध्यायस्य पञ्चमं ब्राह्मणम् ॥



## षष्ठं ब्राह्मणम् ॥



अथ वꣳशः पौतिमाष्यो गौपवनाद्गौपवनः पौतिमाष्यात्पौतिमाष्यो गौपवनाद्गौपवनः कौशिकात्कौशिकः कौण्डिन्यात्कौण्डिन्यः शाण्डिल्याच्छाण्डिल्यः कौशिकाच्च गौतमाच्च गौतमः ॥ १ ॥

आग्निवेश्यादाग्निवेश्यो गार्ग्याद्गार्ग्यो गार्ग्याद्गार्ग्यो गौतमाद्गौतमः सैतवात्सैतवः पाराशर्यायणात्पाराशर्यायणो गार्ग्यायणाद्गार्ग्यायण उद्दालकायनादुद्दालकायनो जाबालायनाज्जाबालायनो माध्यंदिनायनान्माध्यंदिनायनः सौकरायणात्सौकरायणः काषायणात्काषायणः सायकायनात्सायकायनः कौशिकायनेः

कौशिकायनिः ॥ २ ॥

घृतकौशिकाद्घृतकौशिकः पाराशर्यायणात्पाराशर्यायणः पाराशर्यात्पाराशर्यो जातूकर्ण्याज्जातूकर्ण्य आसुरायणाच्च यास्काच्चासुरायणस्त्रैवणेस्त्रैवणिरौपजन्धनेरौपजन्धनिरासुरेरासुरिर्भारद्वाजाद्भारद्वाज आत्रेयादात्रेयो माण्टेर्माण्टिर्गौतमाद्गौतमो गौतमाद्गौतमो वात्स्याद्वात्स्यः शाण्डिल्याच्छाण्डिल्यः कैशोर्यात्काप्यात्कैशोर्यः काप्यः कुमारहारितात्कुमारहारितो गालवाद्गालवो विदर्भीकौण्डिन्याद्विदर्भीकौण्डिन्यो वत्सनपातो बाभ्रवाद्वत्सनपाद्बाभ्रवः पथः सौभरात्पन्थाः सौभरोऽयास्यादाङ्गिरसादयास्य आङ्गिरस आभूतेस्त्वाष्ट्रादाभूतिस्त्वाष्ट्रो विश्वरूपात्त्वाष्ट्राद्विश्वरूपस्त्वाष्ट्रोऽश्विभ्यामश्विनौ

दधीच आथर्वणाद्दध्यङ्ङाथर्वणोऽथर्वणो दैवादथर्वा दैवो मृत्योः प्राध्वꣳसनान्मृत्युः प्राध्वꣳसनः प्रध्वꣳसनात्प्रध्वꣳसन एकर्षेरेकर्षिर्विप्रचित्तेर्विप्रचित्तिर्व्यष्टेर्व्यष्टिः सनारोः सनारुः सनातनात्सनातनः सनगात्सनगः परमेष्ठिनः परमेष्ठी ब्रह्मणो ब्रह्म स्वयंभु ब्रह्मणे नमः ॥ ३ ॥

इति षष्ठं ब्राह्मणम् ॥

अथ अनन्तरं याज्ञवल्कीयस्य काण्डस्य वंश आरभ्यते, यथा मधुकाण्डस्य वंशः । व्याख्यानं तु पूर्ववत् । ब्रह्म स्वयंभु ब्रह्मणे नम ओमिति ॥

इति चतुर्थाध्यायस्य षष्ठं ब्राह्मणम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छंकरभगवतः कृतौ
बृहदारण्यकोपनिषद्भाष्ये
चतुर्थोऽध्यायः ॥